# सर्वसंमतशिक्षा

गणेशं वरदं देवं प्रणिपत्य गजाननम्
द्वित्वादीनां प्रवक्ष्यामि लक्षणं सर्वसंमतम्  १

स्वराद्द्वित्वमवाप्नोति व्यञ्जनं व्यञ्जने परे
स्पर्शो लकारपूर्वो यो व पूर्वश्च द्विरुच्यते  २

स्वरपूर्वस्य रेफस्य परस्ताद्व्यञ्जनं स्थितम्
आपद्यते द्विवर्णं तद्वर्णमात्रे परे सति  ३

संयोगादिरियाद्द्वित्वमनुस्वारात्परस्थितः
अनुस्वारो द्विरुच्येत संयोगे परतः स्थिते  ४

मात्राद्विमात्रोऽनुस्वारो द्विमात्रान्मात्र एव तु
मात्रिकादपि संयोगे मात्रिकस्तु द्विरूपवत्  ५

अनुस्वारो द्विमात्रः स्याद्रेफोष्मसु परेषु च
संयोगे परभूते स्यान्मात्रिकस्तु द्विरूपवत्  ६

ह्रस्वपूर्वौ नङौ द्वित्वमापद्येते पदान्तगौ
अपि स्वरोत्तरावेव श्लिष्टे भवति नान्यथा  ७

इति द्वित्वप्रकरणं समाप्तम्

यत्र येन निमित्तेन द्वित्वं व्यञ्जनमश्नुते
द्वितीयस्य चतुर्थस्य तेन पूर्वागमो भवेत्  १

परमात्याति भूते च ह्युपसर्गाश्च धाम च
पाथ एष च पूर्वेषु पूर्वं छखि भुजा इयुः  २

कुत्रचित्स्वरयोर्मध्ये द्वित्वं लक्ष्यानुसारतः

पूर्वागमस्तथा तत्र ज्ञेयो वर्णविचक्षणैः ३

इति पूर्वागमप्रकरणं संपूर्णम्

अघोषादूष्मणो ह्यूर्ध्वं स्पर्शमात्रे समास्थिते
सकृत्तत्स्पर्शसस्थानस्तन्मध्ये प्रथमागमः १

पदान्तस्यापदान्तस्य सषयोः परभूतयोः
प्रथमस्य द्वितीयत्वमपदान्तस्य शोत्तरे २

प्राप्तौ यत्र निवर्तेत द्वित्वं तदधुनोच्यते
स्वरेभ्यः प्रथमात्पूर्व ऊष्मा चैव विसर्गगौ ३

अनुत्तमात्सवर्गीयात्सवर्णात्पूर्वतः स्थितः
हशस्पर्शपरो लश्च वश्च स्पर्शपरस्तथा ४

नकारश्च पदान्तस्थो यवहात्पूर्वतः स्थितः
एवमूष्मादयो वर्णा उक्ता द्वित्वविवर्जिताः ५

ऋषिभिर्बहुथाप्रोक्तं वेदविद्भिस्तथापि हि
अध्येतृभिः समस्तैस्तु यद्गृहीतं तदीरितम् ६

ङकारादपदान्ताद्वै तधयोः परभूतयोः
यथाक्रमं कगौ स्यातामागमाविति निर्णयः ७

स्पर्शानां यवलानां च मकारः पूर्वतः स्थितः
तेषामवाप्नुयाच्छ्लिष्टे सवर्णमनुनासिकम् ८

ङत्को भवेट्टनात्तस्तु सषयोः परभूतयोः
शपूर्वस्य नकारस्य ञकारस्तैत्तिरीयके ९

अनूष्म प्रकृतेः स्पर्शादुत्तमेऽनुत्तमाद्यमान्
वर्णयन्त्यानुपूर्व्येण वर्णक्रमविचक्षणाः १०

इदानीं हस्तविन्यासभेदोच्चारणसिद्धये
अनुक्तानामुदात्तादिवर्णानां सिद्धयेऽपि च  ११

व्यञ्जनं स्यात्परस्याङ्गं पूर्वस्यावसितँ भवेत्
परायुक्तमनुस्वारो योगादिर्भक्तिरेव च
असवर्णं परस्याङ्गमन्तस्थापरमक्षरम्  १२

पराङ्गोष्मपरस्पर्शो यमश्चैवाङ्गनिर्णयः
स्वरोत्तरोष्मणः पूर्वरेफस्य स्वरभक्तिता  १३

ऋकारस्य स्वरूपं तद्बुध्वा बोद्धुं हि शक्यते
स्वरभक्तिरतो विद्यादृकारमिह विस्तरात्  १४

ऋकारस्य स्वरूपं हि श्लिष्टं पादचतुष्टयम्
पादेषु तेषु विज्ञेया वादावन्ते स्वरात्मकौ  १५

अनूरेफस्य मध्ये द्वौ विज्ञेयौ व्यञ्जनात्मकौ
स्वरात्मकेन पादेन ह्युत्तरेणोत्तरं तथा  १६

स्वरपादान्वितौ भागौ स्वरभक्तिरितीरितौ  १७

हकारे पूर्वभागः स्यादुत्तरः शषसेषु च
हकारे संवृतां विद्याद्विवृतामितरत्र तु  १८

पूर्वस्वरस्य चाल्पत्वमित्वमुत्वमिति त्रयम्
एतत्त्रयं विसृज्यैव स्वरभक्तिं समुच्चरेत्  १९

स्वरभक्तिः परात्स्वारात्प्रचयत्वमवाप्नुयात्
स्वारे दीर्घे तु नान्त्याया स्वतन्त्रा धूर्षदं भवेत्  २०

कामो मन्युस्तथा पापं त्रिषु पूर्वेषु तत्वतः

स्वरभक्तिं विजानीयादिकारो नैव संभवेत् २१

पुपूपौ त्रिषु पूर्वेषु शषहेषु परेषु च
रेफादुकार एवस्यात्स्वरभक्तिर्न विद्यते २२

अकारिषं च णः पूर्वा रिरीषो रीरिषन्नपि
तारिषस्तारिषश्चेत्स्यात्स्वरभक्तिर्न विद्यते २३

हशोत्तरे लकारश्च प्राप्नुयात्स्वरभक्तिताम् २४

करेणुः कर्विणी चैव हरिणी हरितेति च
हंसपदेति विज्ञेयाः पञ्चैताः स्वरभक्तिताः २५

करेणू रहयोर्योगे कर्विणी लहकारयोः
हरिणी रशसानां च हारिता लशकारयोः २६

यातु हंसपदा नाम सातु रेफषकारयोः
वासः शब्दाननुस्वारः पूर्वस्याङ्गं न काठके
न ह्यूष्मप्रकृतिः स्पर्शः पूर्वाङ्गत्वमवाप्नुयात् २७

इति मञ्चन भट्टविरचिते सर्वसंमतशिक्षा विवरणे
अङ्गप्रकरणं समाप्तम्

## स्वरसंस्थानप्रकरणम्

उदात्तादिस्वराधार वर्णानामिह संस्थिते
प्रोच्यते स्वरसंस्थानमज्ञानां ज्ञानसिद्धये १

यदेतद्देहदीर्घत्वमङ्गानां दृढता च या
कण्ठाकाशस्य कृशता निमित्तान्युच्च जन्मनि २

ह्रस्वत्वं यच्च देहस्य त्वङ्गानां मृदुता च या

कण्ठाकाशमहत्वं च नीच जन्मनि हेतवः ३

कारणं स्वरितोत्पत्तौ समाहारोऽनयोर्भवेत्
उदात्तश्रुतिरेवेति प्रचयस्य प्रसिद्धता ४

उच्चात्परोऽनुदात्तो यः स्वरितत्वमवाप्नुयात्
तैरोव्यञ्जनसंज्ञोयमुच्चपूर्वः प्रकीर्तितः ५

अमुच्चपादवृत्तं च वदेदल्पतरं बुधः
विवृत्यां पादयोर्यस्तु पादवृत्तः प्रकीर्तितः ६

स प्रातिहतनामा स्यात् स्वर्यते यस्तु सांहिते
अत्यन्तमार्दवं तत्र कार्यं स्वरविचक्षणैः ७

पादवृत्तहतौ स्यातां तैरो व्यञ्जन वाधकौ
हतः सर्वावशब्दाभ्यां नहि प्रत्ययबाधकः ८

स्वरितादनुदाताश्च प्रचयत्वमवाप्नुयुः ९

स्वरितोदात्तयोर्यत्र परत्र स्थितयोः सतोः
स्वरितो नभवेत्तत्र प्रचयश्च निवर्त्यते १०

एदोद्भ्यां यत्र लुप्तः स्यादकारस्तत्स्वरादिह
स्वरान्तरविधिं वक्ष्ये पूर्ववर्णस्य विस्तरात् ११

लुप्ताकारोऽनुदातश्चेत्पूर्वोच्च स्वरितो भवेत्
एषोऽभिनिहतो ज्ञेयो वदेदृढतरं बुधः १२

इवर्णोकारयोः स्थाने यवत्वे सत्युदात्तयोः
तस्मात्परं हि यन्नीचं स्वरितस्तस्य वै भवेत् १३

नाम्ना तु क्षैप्र एवस्यादमुं दृढतरं वदेत्

उकारादुच्चकान्नीचे ह्युकारे चोत्तरस्थिते १४

ऊकारः क्रियमाणोऽत्र स्वरितः सन्धितो भवेत्
प्रश्लिष्टोऽप्युपदिष्टोऽयं वदेन्मृदुतरं बुधः १५

सयवं स्वर्यते यत्र पदस्थं नीचपूर्वकम्
अपूर्वं वा सनित्यः स्याद्वदेद्दृढतरं बुधः १६

पदान्तरोच्चपूर्वोऽपि नित्य एव च नान्यथा १७

उक्तलक्षणशून्योयः स्वर्यते कुत्रचिद्यदि
अल्पवायुर्भवेत्सोऽपि पादवृत्त इतीरितः १८

नादानुस्वारयोः पूर्वं स्वरः स्वरितभाक्स्थितः
न ह्याक्षेपः स्वरे तत्र नादेऽनुस्वार एव सः १९

विरामे पञ्चमानां तु नादसंज्ञा प्रकीर्तिता
यत्रैको मध्यको नीचो विक्रमः स उदाहृतः
स्वरितं विक्रमं चैव वदेद्दृढतरं बुधः २०

स्वरिते परभूते च स्वरितस्योत्तरार्धकम्
नीचं कुर्यात्सकम्पं च यथा दीर्घं तमुच्चरेत् २१

मध्ये तु कम्पयेत्कम्पमुभे पार्श्वे समे वदेत् २२

द्वयोरेकं भवेदात्र तत्रापि स्वरौच्यते
तयोरेकोऽनुदात्तश्चेदुच्च एव तयोर्भवेत् २३

स्वरानुदात्तयोर्योगे स्वरितस्तत्र वै भवेत् २४

एकोदात्तं पदं ज्ञेयमुदात्तद्वितयं पदम्
त्र्युदात्तं वा पदं विद्यान्नित्यस्वारमथापरम् २५

सर्वानुदात्तमथवा पदानां कुत्रचित्पदम्
ससमासस्त्र्युदात्तः स्यादेकोदात्तद्व्युदात्तयोः २६

यदेष्वन्यद्धितं नीचमेवमेव पदस्थितिः
एवं शिष्टैरभिहितं स्वरूपं वैदिकस्य तु २७

परस्तात्पदकालेऽयं पूर्वोच्चारण एव हि २८

नोपसर्गोऽवसानस्थो नीचः पूर्वस्तथा द्वयोः
त्रिषु मध्यस्थितं चैव ह्यवानोऽवग्रहस्तथा २९

प्रापावान्वभिपर्युत्सुव्यतिन्यध्यप्युपप्रति
निस्संपरोपसर्गाः स्युः सप्तात्र द्वादशस्मृताः ३०

मास्तान्महित्वनानाकं प्रियधाविशतोपुणः
मोषूणश्चार्यमायाति पूषाधत्ताप्यधत्तयत् ३१

दक्षिणा वर्ततोत्याप्र ऋचासादयतीति च
भूत्वा हरश्च मावृक्षिभूता विशविशत्यपि ३२

कृत्वाहरति धत्ते च लभते त्रिक्रमाः स्मृताः
दध्ना तनक्ति चोद्गाता रोहतीति च विंशतिः ३३

आकारान्तमुदात्तान्तमाङ परं यत्र दृश्यते
त्रिक्रमं तं विजानीयान्मूषूण ऊषुणस्तथा ३४

संहितावक्रमे पूर्वं परं पदवदुच्चरेत्
क्रमे त्यक्तं प्रगृह्यं तदिति मध्यं द्विरुच्चरेत्
इङ्ग्यं च यत्क्रमे त्यक्तमवसानं द्विरुच्चरेत् ३५

अन्तस्थाभ्यः पवर्गाश्च स्वरेभ्यः पूर्वतः स्थितौ

त्रिष्टुक् छन्दस्तथानुष्टुक् ककारान्ताविती रितौ ३६

अन्यत्र तु पकारान्तावेताविति च निश्चितौ
पूर्वस्य तु विधेस्तत्र वैपरीत्यमिति स्थितिः ३७

वर्णद्वये विरामो वा स्वरयोर्मध्य ओष्ठ्ययोः
पूर्ववर्णप्रयत्नेन नवदेदुत्तरं बुधः ३८

औकारे परभूते च वकारे चाधरस्य च
हकारमौरसं विद्यादन्तस्थासु परासु च
उत्तरेषु परेष्वेवं नासिक्यत्वमिहाधिकम् ३९

नासाभ्यां नोत्सृजेद्वायुमत्यन्तं हमसंगमे
न वदेदुरसात्यन्तमन्तस्थाभिश्च संगमे ४०

प्लुतो वर्णः पदान्तस्थो नासिक्यो रङ्गसंज्ञकः
चत्वारः काठके रङ्गा दीर्घाह्यारण्यके विदुः ४१

पञ्चरङ्गाः प्लुता दीर्घाश्चत्वारस्तैत्तिरीयके
श्लोकाँसुमङ्गलाँ यद्घ्राँ उपहूता ममाँ प्लुताः ४२

नित्या भवन्ति नासिक्या अनुस्वरोत्तमायमाः
अन्तस्थाश्च हकारश्च स्वराश्चैव निमित्ततः ४३

स्वराणामूष्मणां चैव प्रयत्नो विवृतः स्मृतः
संवृतत्वमकारस्य विशेषोऽयं विधीयते ४४

स्पर्शानां स्पृष्टतां विद्यादन्तस्थास्वीषदीरिता
नेमिवत्स्पृष्टता ज्ञेया चतुर्थेषु विचक्षणैः ४५

स्पर्शानां यत्र संयोगः पाठे यदि भवेत्तदा

तयोरादेः श्रुतिर्नास्ति विरामव्यञ्जनस्य च ४६

पदान्ते चोत्तरस्यादावेकवर्गेऽवसानगे
पूर्वं वर्णप्रयत्नेन न वदेदुत्तरं बुधः ४७

ओमः प्रवर्गसंयोगे प्रयत्नो नेष्यते पृथक्
विरामो मात्रिकस्तत्र ततोऽन्यत्र द्विमात्रिकः ४८

संहितायां च पदवत्कार्यं यत्र सांहितम्
प्रकृतिः सा तु विज्ञेया ज्ञानादेव फलं लभेत् ४९

आदि वर्णे चतुर्थे च सप्तमे दशमे तथा
द्वादशे च स्वरेष्वेषु मात्राकालः प्रकीर्तितः ५०

द्वितीयः पञ्चमश्चैव ह्यष्टमैकादशौ तथा
त्रयोदशाद्याश्चत्वारो द्विमात्राः परिकीर्तिताः ५१

नवमस्य तृतीयस्य षष्ठस्य प्लुतता भवेत् ५२

त्रिपादवान् लकारः स्यात्पञ्चमानां तु केवलात्
दीर्घात् प्लुताच्च कालो हि मात्रिकः परिकीर्तितः ५३

पञ्चमानां द्विमात्रत्वं ह्रस्वस्योपरि तिष्ठताम्
विवृत्तौ पदयोर्मध्ये एकमात्रः प्रकीर्तितः ५४

पदमध्येऽर्धमात्रा स्याद्विवृत्ताविति निश्चयः
ह्रस्वादिर्वत्सत्सानुसृन्तेवत्सानुसारिणी ५५

पदमध्ये विवृत्तत्वं भाष्यकारेण तस्य च
सामर्थ्यविहितः कालो मात्रार्धं प्रग्रहेषु च ५६

प्रग्रहेङ्ग्यप्रयुक्तत्वात्पादैकत्वमितिस्फुटम्

कुर्वन्त्यध्ययनं सर्वे पदैक्यं परिगृह्य च ५७

नो चेत्संख्यातिरिक्तमृचिवत्पदवच्च तत्
अवसाने द्विमात्रत्वं पदानामिति निश्चयः ५८

अनुस्वारस्य मात्रत्वं संयोगे परतः स्थिते
अन्यत्राध्येतृभिः सर्वैः द्विमात्रः परिकीर्तितः ५९

अनुस्वारो द्विमात्रःस्याद्रेफोष्मसु परेषु च
संयोगे परभूते स्यान्मात्रिकस्तु द्विरूपवत् ६०

ओष्ठ्ययोः स्वरयोर्मध्ये संयोगादिर्यदि स्थितः
विसर्गात्त्वपरादूर्ध्वमुभयत्रार्धमात्रिकः ६१

इलमध्ये तु कालस्य मात्रार्धं परिकीर्तितम्
अर्धमात्रा भवेद्भक्तिर्वाक्यान्तेऽध्यर्धमात्रता ६२

अवग्रहावसाने तु मात्राकालः प्रकीर्तितः
ऋगर्धयोस्त्रिमात्रत्वमवसाने समीर्यते ६३

नासिक्यो व्यक्तिमध्यस्थः सपादो मात्रिको भवेत्
समाप्तावनुवाकस्य मात्राणां पञ्चकं स्मृतम् ६४

अष्टौदशेति विज्ञेयं प्रश्ने काण्डे यथा क्रमम्
तन्त्राणां हि समाप्तौ तु त्र्यहःकाल इष्यते ६५

वेदस्योपक्रमे विद्वानवसानेऽप्यतन्द्रितः
उच्चरेत्प्रणवं ब्रह्मरक्षायै छन्दसां स्फुटम् ६६

आदावनुक्ते स्त्रवति परस्ताच्च विशीर्यते
यजुः प्रणव उच्चः स्यात्स्वाराः स्युस्त्वों तदादिषु ६७

प्रारम्भकश्चतुर्मात्रो वेदस्थः स्यात्तदर्धकः
अध्यायान्त्योऽनुवाकान्त्यो कर्माद्यश्च त्रिमात्रिकः ६८

प्रारम्भाद्यः क्रमान्नादो मात्राणुद्व्यणुमात्रिकः
वेदस्थ प्रणवे तु स्यात्समकारे द्विमात्रता ६९

अस्वरं व्यञ्जनं नित्यमणुमात्रं प्रयुज्यते
संसर्गाच्चेति बाहुल्यान्मात्रावृद्धैः प्रकीर्तिता ७०

चाषो रौत्येकमात्रं हि द्विमात्रत्वं तु वायसः
त्रिमात्रं हि शिखी रौतिह्येतन्मात्रादिलक्षणम् ७१

विलम्बितं द्रुतं मध्यं वाचस्तिस्रो हि वृत्तयः
कर्मान्यत्वं प्रति वृत्तौ कालान्यत्वं भवेत्स्फुटम् ७२

उक्तः प्रयत्नो यो यस्य समः सर्वत्र तस्य सः
प्रयत्न साम्यमे तद्धि वृत्तिसाम्यं तदुच्यते ७३

उपक्रमे यया वृत्त्या पठेत्तावत्तथैव हि
यावद्विराममेतद्वद्वृत्तिसाम्यं तदुच्यते ७४

आश्रित्य मध्यमां वृत्तिं कालानां निर्णयः कृतः
प्रातिशाख्यादिशास्त्रेषु यस्मात्सैव समाश्रिता ७५

विक्रमः पदमध्ये च नेङ्ग्यमध्ये विधीयते
वाक्यान्ते च पदान्ते च विक्रमस्तु विधीयते ७६

नित्यं प्राक्पदसंबन्धं चादिं कुर्याद्विचक्षणः
परेण नित्यं संबन्धं कुर्यात् प्रादिं तथैव च ७७

गीतीशीघ्री शिरः कम्पी यथा लिखितपाठकः

अनर्थे ज्ञोल्पकण्ठश्च षडेते पाठकाधमाः ७८

सव्यक्तमक्षरं यच्च माधुर्यं यच्च संयुतम्
सुव्यक्तश्च पदच्छेदो यच्च धैर्यसमन्वितम् ७९

लये समर्थता या च स्वरनिर्मलता च या
षट् संख्याकागुणा ह्येते विहिताः पाठकस्य वै ८०

उदात्तो ब्रह्मजातिः स्यान्नीचो राज्ञः स उच्यते
स्वरितो वैश्यजातिश्च प्रचयः शूद्र ईरितः ८१

वर्गाणां प्रथमा वर्णाः स्वराश्च ब्रह्मजातयः
द्वितीयाश्च तृतीयाश्च चतुर्थाः क्षत्रजातयः ८२

अन्तस्थाश्चोत्तमाश्चैव वैश्याः खलु समीरिताः
अनुस्वारो विसर्गश्च ह्यूष्माणः शूद्रजातयः ८३

गोकर्णाकृतिहस्ते हि निर्दिशेद्दक्षिणे स्वरम्
निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयन् ८४

अङ्गुलीषु च सर्वासु न येदङ्गुष्ठमेव तु
शिरः कम्पं विहायैव स्वरन्यासो विधीयते ८५

कनिष्ठानः मिका मध्या तर्जनी मध्यपर्वसु
नीचस्वारधृतो दान्तान् क्रमेणैव विनिर्दिशेत् ८६

पदान्तस्य न कारस्य यवहेषु परेषु च
तयोर्नकारयाद्योश्च संयुक्तत्वं न विदाते ८७

उच्चारणेषु वर्णानां सामश्चेतावदीरिता
अन्यूनानतिरिक्तःसन्नुच्चरेद्ब्रह्मभक्तितः ८८

व्याघ्री यथा हरेत्पुत्रं दंष्ट्राभ्यां न च पीडयेत्
भीतापतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ८९

नातिव्यात्तं न चाव्यक्तमेवं वर्णानुदिङ्गयेत्
पयः पूर्णमिवामत्रं हरन्धीरो यथामति ९०

उच्चरेत्परया भक्त्या सर्वकालमतन्द्रितः
यज्ज्ञातिस्खलनं तेषां तज्ज्ञातिहननं यतः ९१

हस्ताद्भ्रष्टः स्वराद्भ्रष्टो वर्णात्कालात्तथार्थतः
प्रयोगाच्च परिभ्रष्टो न वेदफलमश्नुते ९२

हस्तहीनं तु योऽधीते स्वरवर्णार्थवर्जितम्
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ९३

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ९४

स्वरवर्णान् स्फुटं मत्वा सम्यग्यश्च समुच्चरेत्
अभुत्कृष्टफलं तस्य तत्र तत्र समीरितम् ९५

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्
ऋग्यजुःसामभिःपूतो ब्रह्मलोके महीयते ९६

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः
स्वरमात्रादिभागज्ञो गच्छेदाचार्यसंसदम् ९७

सूर्यदेव बुधेन्द्रस्य नन्दनेन महात्मना
प्रणीतं केशवार्येण लक्षणं सर्वसंमतम् ९८

इति सर्वसंमतशिक्षा संपूर्णा

व्यासो लक्ष्मीर्भरद्वाजः शंभुः कापिलनिर्मिताः
कौहलीयः कालात्रेयारण्यशिक्षा नव स्मृताः ॥